रपरष्यकारः॥ एवं विधाय प्राणप्रतिष्ठां कुर्यात्॥ स्वहृदये हस्तं निधाय ॐ
आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः सोहं मम प्राणा इह प्राणाः मम जीव इह =
स्थितः मम सर्वाणीन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहायांतु सु
खं चिरं सुखं तिष्ठंतु स्वाहा क्रों ह्रीं आं इति वारत्रयं जपेत्॥ इति प्राणप्रति
ष्ठा॥ अथ मातृकान्यासः॥ अं दक्षिण करतले आं वाम करतले इं दक्षिण
करतल पृष्ठे ईं वाम करतल पृष्ठे॥ उं दक्षिण करभे॥ ऊं वाम करभे॥
ऋं इत्यादि दत्त्वा वर्णा दक्षिण करांगुष्ठादि वामकरांगुष्ठपर्यंतं न्यसेत्॥ वा
मतर्जनीमारभ्य दक्षतर्जन्यंतं एकैकस्यां पर्वस्वग्रे च॥ चतुरश्चतुरो
वर्णानिति क्रमेण कादिसांतानि न्यस्य अंगुष्ठयोर्हं ळं सर्वाग्रेषु क्षका
रं न्यसेदिति करशुद्धिं विधाय मातृकान्यसेत्॥ अस्य श्रीमातृकास
रस्वतीमंत्रस्य ब्रह्मा ऋषिर्देवीगायत्री छंदः मातृकसरस्वती देव
ता मातृकान्यासे विनियोगः॥ अं कं खं गं घं ङं आं अंगुष्ठयोः
इं ईं तर्जन्योः॥ उं टं ऊं मध्यमयोः॥ एं तं ऐं अनामिकयोः॥ ओं पं औं क
निष्ठिकयोः॥ अं यं १० अः करतलकरपृष्ठयोः॥ इत्यंगुलिन्यासः॥ ए
भिरेव मंत्रैर्हृदयाय नमः इत्यादि षडंगानि कुर्यात्॥ ततो मातृकां
ध्यायेत्॥ पंचाशद्वर्णभेदैर्विहितवदनदोः पादयुक्कुक्षिवक्षोदेशां
भास्वत्कपर्दीकलितशशिकलामिंदुकुंदवदातां॥ अक्षस्रक्कुंभचिंता

ऌपि तवरकरां त्रीक्षणां पद्मसंस्थां मच्छाकल्यामतुच्छास्तनजघनभ
रां भारतीं तां नमामि ॥ इति ध्यात्वा अं इति शिरसि ॥ आं इति मुखवृत्ते ॥
इं दक्षिणनेत्रे ॥ ईं वामनेत्रे ॥ उं दक्षिणकर्णे ॥ ऊं वामे ॥ ऋं दक्षिणना
\\ सायां ॥ ॠं वामे ॥ ऌं दक्षिणकपोले ॥ ॡं वामे ॥ एं ऊर्ध्वोष्ठे ॥ ऐं अधरे ॥
४ ओं ऊर्ध्वदंतपंक्तौ ॥ औं अधोदंतपंक्तौ ॥ अं जिह्वाग्रे ॥ अः सर्वमुखे ॥
कं दक्षिणभुजे खं कूर्परे ॥ गं मणिबंधे ॥ घं अंगुलीमूले ॥ ङं अंगु
ल्यग्रे । एवमेव चवर्गं वामभुजे न्यसेत् ॥ टं दक्षिणोरुमूले । ठं जानुनि
डं गुल्फसंधौ । ढं अंगुलीमूले णं अंगुल्यग्रे । एवमेव तवर्गं वामोरु
पार्श्वे मूलादि न्यसेत् ॥ पं दक्षिणदोर्मूले । [redacted] । वं वामदोर्मूले । शं सर्व
दक्षिणभुजे । षं सर्ववामभुजे । सं उरुमूलादिपादाग्रपर्यंतं । हं वामो
– रुमूलादिपादाग्रपर्यंतं ॥ ळं सर्वोदरे । क्षं सर्वांगे ॥ इति सृष्टिमातृका
न्यासः ॥ ततः क्षमित्यादि अंपर्यंतं संहारक्रमेण सर्वांगव्यापकादि
शिरोंतं यथास्थानं न्यसेत् ॥ इति संहारमातृका न्यासः ॥ अः इत्या
दि क्षः पर्यंतं सबिंदुविसर्गं पूर्ववन्न्यसेत् ॥ इति स । विसर्गमातृका न्यासः ॥
डः ढः इत्यादि क्षः इति पर्यंतं दक्षिणपादगुल्फसंधिप्रभृति यथा
स्थानं विन्यस्य पुनः अः आं इत्यादि ठः पर्यंतं वर्णान् शिरःप्रभृति
दक्षिणजानुपर्यंतं न्यसेत् ॥ इति स्थितिमातृका न्यासः ॥ स्थितिं



फं वामे । बं पृष्ठवंशे । भं नाभौ । मं हृदये । प

तोग्रहस्थानं॥ संहारोनोपनीनां॥ ततः हंसं अं हंसः आं हंसः इं हंसः ईं हं
सः उं इत्यादि हंसः क्षं इति न्यसेत्। पुनः सोहं क्षं सोहं लं सोहं हं सोहं सं इत्या
दि सोहं अं इति पर्यंतं। विपरीतक्रमेण न्यसेत्। पुनः ह्रीं अं इत्यादि ह्रीं क्षं
पर्यंतं न्यसेदिति शक्तिमातृकान्यासः॥ पुनर्मूलमंत्रयुक्तां अं इत्यादि क्षं
पर्यंतं न्यसेत्॥ एतावत्कर्तुमसमर्थः श्रुसमात् कां शक्तिमातृकां मूलमंत्र
युक्तां मातृकां वा न्यसेत्॥ एवं मातृकान्यासान्विधाय ग्रपं नयागं कुर्यात्॥
क तद्यथा॥ आदौ गणपति मंत्रस्य गणों ऋषिर्निचृद्गायत्री छंदः श्रीमहाग
णपतिप्रसादसिध्यर्थे जपे विनियोगः॥ ॐ गां अंगुष्ठयोः श्रीं गीं तर्जन्योः।
ह्रीं गूं मध्यमयोः॥ क्लीं गैं अनामिकयोः ग्लौं गौंः कनिष्ठकयोः। गंगः क
रतलकरपृष्ठयोः। इत्यंगुलिन्यासं विधाय एभिरेव षडंगन्यासं कुर्या
त्॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा॥
इति गणपति मंत्रः॥ ततो महागणपतिं सावरणं ध्यायेत्॥ मंदारैर्वैः
कल्पवृक्षविशेषैर्विशिष्टतरफलकैः॥ शिशिरितचतुराशं तत्र वीक्षात
पचंद्रिकाकुले वनतले॥ रक्षवजलनिधिलहरीकण जालवाहिनागंध
वहेन॥ संसेविते च स्फुरत्तरुस्कमनः श्रितमधुपपक्षवलनपरेपा॥ र
त्नमंडपे मणिवज्रवालफलपुष्पपल्लवस्य सरः॥ मतनोधस्ताद्
तुभिर्युगपत्संसेवितस्य स्फुरत्तरोः॥ सिंहमुखपादपीठे कठिपिमये

पद्मेत्रिषट्कोणोल्लसितो। आसीनस्त्वेकरदो रहः कुहरोदश भुजो रूणश्च गजवदनः॥ बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल श्रीहीय
स्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः॥ ध्येयो वल्लभया सपद्मकरया
श्लिष्टो ज्वलद्भूषया विश्वोत्पत्तिविनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः॥
करपुष्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण। अविरतधारां
विकिरन्नुपरितः साधकसमयसंपत्त्यै॥ मदजललोलुपमधुकरमा
लां निजकर्णतालतया। निरसयन्मुहुर्मुहुः स्मरैर्नस्करैश्वसेवितो युगपत्॥
अग्रेऽथ बिल्वमभितश्च रमारमेशौ तद्दक्षिणे वटयुषो गिरिजावृषांकौ॥
पश्चादथ पिप्पलजुषौ रतिपुष्पबाणौ सव्ये प्रियंगुमभितश्च महीवराहौ॥ ध्ये
यौ वनौ वक्रदरैः शुरोक्तौ पाशांकुशाख्य परशुत्रिशिखैरथान्यौ॥ यु
ग्मा सत्वलेक्षुमथ चापशरै स्वतीया वं खौशुकाह कलमाग्रगदारथागैः॥
ध्येया षट्कोणा। स्त्रिषु परितः पाशांकुशाभयेष्टकराः॥ मधुप्रमदागपावत
यो रक्ताकाराः प्रभिन्नमदविवशाः॥ अयास्त्वामोदप्रमोदसुमुखदु
र्मुखविघ्नविघ्नकर्त्तारः॥ सव्यापसव्यभागे तस्य ध्येयौ च शंखपद्मनि
धी॥ मौक्तिकमाणिक्याभौ वर्षन्तौ धारया धनानि सदा॥ सिद्धिसमृद्धि
वान्येकांतिर्मदनावतीमदद्रवया॥ द्राविणिवसुधारा स्व्येवसुमत्यपि
विघ्ननिधिप्रमदाः॥ ध्यात्वैवं द्विरदमुखं भवति नरः सर्वसंपदां निलयः॥

इति ध्यात्वा महागणपतिमंत्रं अष्टधा जपेत्॥ ततः अस्य श्री बीजगणपतिमं
त्रस्य गणक ऋषिर्निचृद्गायत्री छंदः॥ श्रीबीजगणपतिर्देवता बीजगण
पति प्रसाद सिध्यर्थे जपे विनियोगः॥ गां गीं गूं गैं गौं गः इत्या षडङ्गुलिन्यासं
विधाय षडंगन्यासं च विधाय॥ रक्तो रक्तांगरागांशुक कुसुमयुतस्तुंदिल
श्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः॥ हस्ता
ग्राक्लृप्तपाशांकुशरदवरदो नागवक्त्रोहिभूषो देवः॥ पद्मासनो वो भ
वतु नतसुरो भूतये विघ्नराजः॥ इति ध्यात्वा चतुश्चत्वारिंशद्वारं बीज
गणपतिमंत्रं जपेत्॥ ततो गणानां त्वा गणपति वैदिक मंत्रं वार चतुष्ट
यं जपेत्॥ पुनर्महागणपतिमंत्रं वार चतुष्टयं जप्त्वा षडंगपूर्वकं अथ
मातृका न्यासं वारत्रयं कृत्वा ततो षोडश स्वरान्तु श्रीयं आदित्याय नमः
इति मुखे न्यसेत्॥ यं रं लं वं सोमाय नम इति दक्षिण करतले॥ कं खं गं
घं ङं अंगारकाय नम वाम करतले॥ चं शुक्राय दक्षिण पादे॥ टं बुधाय
नमः वामे॥ तं बृहस्पतये नमः॥ नाभौ॥ पं शनैश्चराय नमः हृदये॥
इति सप्तग्रहन्यासं विधाय॥ अस्य श्री आत्माष्टाक्षर मंत्रस्य ब्रह्मा ऋ
षिर्गायत्री छंदः स्वप्रकाशो सच्चिदानंद विग्रहः परमात्मा देवता प्र
पंचयागे विनियोगः॥ ॐ ह्रीं अं कं पं आं स्वाहा हृदयाय नमः॥ ॐ ह्रीं
इं चं यं रं सोहं शिरसे स्वाहा॥ ॐ ह्रीं उं टं ऊं हंसः शिखायै वषट्॥ ॐ

ह्रीं एं तं ५ ऐं ह्रीं कवचाय हुं ॥ ॐ ह्रीं ॐ पं ५ औं ॐ नेत्रत्रयाय वौषट् ॥ ॐ
ह्रीं अं यं १० ज्रां हरिहर अस्त्राय फट् इति षडंगं विधाय स्वात्मानं सक
१० लप्रपंचसाक्षिणं निरतिशयानंदचिद्विलासाविनाभूतं परिपूर्णमवि
१० कारं विचिंत्य स्वस्मिन्वर्णान् जुहुयात् ॥ ॐ ह्रीं क्षः हंसः सो हं स्वाहा ॥
ॐ ह्रीं लः हंसः सो हं स्वाहा इत्यादि संहारक्रमेण ॐ ह्रीं अः हंसः सो हं
स्वाहेति पर्यंतं हुत्वा पुनः ॐ ह्रीं अं हंसः सो हं स्वाहा ॥ ॐ ह्रीं आः हंसः
सोहं स्वाहेत्यादि ॐ ह्रीं क्षः हंसः सोहं स्वाहेति पर्यंतं सृष्टिक्रमेण मातृ
कान्यासं कुर्यात् ॥ एवं प्रपंचयागं कृत्वा कृतकृत्यो भवति ॥ सर्वमंत्रा
– स्फुरद्रूपा भवंति ॥ अग्निहोत्रादय एतत्सोमस्य कोट्यंशेनापि न स
दृशाः ॥ एवं कुर्वन्नात्मलयाज्जीवन्मुच्यते ॥ यत्रकुत्र शरीरत्यागे मुक्त एव
नात्र संशयः इति प्रपंचयागः ॥ एवं प्रपंचयागं विधाय पूर्ववत् षोढान्या
सं कुर्यात् ॥ अं विघ्नेश्वराय ह्रियै नमः ॥ आं विघ्नराजाय श्रियै नमः ॥ इं वि
सै नायकाय पुष्ट्यै नमः ॥ ईं शिवोत्तमाय शान्त्यै नमः ॥ उं विघ्नकृते तुष्ट्यै
नमः ॥ ऊं विघ्नहर्त्रे सरस्वत्यै नमः ॥ ऋं गणनायकाय रत्यै नमः ॥ ॠं
एकदंताय मेधायै नमः ॥ लृं द्विदंताय कांत्यै नमः ॥ लॄं गजनायकाय कामिका
न्यै नमः ॥ एं निरंजनाय मोहिन्यै नमः ॥ ऐं कपर्दिने जटायै नमः ॥ ॐ १०
दीर्घमुखाय तीव्रायै नमः ॥ औं शंकुकर्णाय ज्वालिन्यै नमः ॥ अं व

षभध्वजाय मं द्रायैनमः। भः गणनाथाय तुयश्रासैनमः॥ फं गजेंद्राय कामरूपिण्यैनमः॥ स्वं शूर्पकर्णाय उग्रायै नमः। गं त्रिलोचनाय तेजोवत्यैनमः
नं लं बोदराय सत्यायैनमः॥ उं महानंदाय विघ्ननाशिन्यैनमः॥ बं चतुर्मूर्त
ये स्वरूपायैनमः। सं सदाशिवाय कामार्त्तयैनमः। जं अमोदाय मदविह्
लायै। मं दुर्मुखाय विकटायै। यं सुमुखाय घूर्णिताननायै। टं प्रमोदा
य भूत्यैनमः। ठं एकपादाय विभूत्यैनमः। डं द्विजिह्वाय सत्यायै। ढं शू
राय सख्यै। णं वीराय माहेश्यै। तं षण्मुखाय धनायै। थं वरदाय विके
वा र्णायै। दं वामदेवाय भद्रकुड्यै। धं वक्रतुंडाय लज्जायै। नं द्विरंडाय
दीर्घघोणायै। पं सेनान्ये धनुर्धरायै। फं ग्रामण्यै कामिन्यैनमः।
बं मत्ताय रत्यै। भं विमत्ताय चंद्रकालायै। मं मत्तवाहनाय शशिप्रभा
यै। यं जटिने लोचनायै। नं चंडिने चपलायै। लं खड्गिने रुध्यै। वं
वरेण्याय श्वरायै। शं वृषकेतनाय सुरूपायै। षं भक्तप्रियाय सुर
संगणे थायै। क्षं गणेश्वराय कालजिह्वायै। इति मातृकास्थाने षुन्यसे
शायद् त्॥ अथ ग्रहन्यासः। अं १६ आदित्याय नमः हृदय ॥ यं रं लं वं सो
गयिने मायनम। भ्रूमध्ये॥ कं ५ अंगारकाय नमः नेत्रयोः॥ तं ५ शुक्राय
मः
हं मेघ नमः कुक्षौ॥ दं बुधाय हृदये॥ तं ५ बृहस्पतयेनमः कंठे॥ पं ५ श
नादाय दुर्गंधीपायैनमः लंबापीन्यैसीवायैनमः

नेश्वरायनमः। नाभौ।। ॐ षं सं हं राहवे मुखे।। लं क्षं केतवे नमः गुदे।।
इति ग्रहन्यासः।। अं आं अश्विन्यै नमः भाले।। इं भरण्यै नमः दक्षिण
३१ नेत्रे।। ईं उं ऊं कृत्तिकायै। वामनेत्रे। ऋं ॠं ऌं ॡं रोहिण्यै। दक्षिणक
॥ र्णे। एं मृगशीर्षाय। वामकर्णे। ऐं आर्द्रायै। दक्षिणनासारंध्रे ओं
औं पुनर्वसुभ्यां। वामे। कं पुष्याय। कंठे। खं गं अश्लेषायै। दक्षिण
भुजे। घं ङं मघायै। वामे। चं पूर्वाफाल्गुन्यै। दक्षिणकूर्परे। छं जं उ
त्तराफाल्गुन्यै। वामे। झं ञं हस्ताय दक्षिणमणिबंधे। टं ठं चित्रायै। वामे।
डं स्वात्यै। दक्षिणस्तने। ढं णं विशाखायै। वामस्तने। तं थं अनुराधायै।
नाभौ। दं धं ज्येष्ठायै। दक्षिणपार्श्वे। नं पं फं मूलाय। वामपार्श्वे। बं पू
र्वाषाढायै। दक्षिणोरौ। भं उत्तराषाढायै। वामोरौ। मं श्रवणाय दक्षि
णजानुनि। यं रं धनिष्ठायै वामजानुनि। लं शततारकायै दक्षिण
जंघायां। वं शं पूर्वाभाद्रपदायै। वामजंघायां। षं सं उत्तराभाद्रपदायै
दक्षिणपादे। लं क्षं अं अः रेवत्यै नमः वामपादे। इति नक्षत्रन्यासः।। अ
थ योगिनीन्यासः।। डां डीं डूं डैं डौं डः डाकिनि मां रक्ष रक्ष मत्त्वं रक्ष
सर्वसत्ववशंकरि देवि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ह्रीं घोरे देवी
ह्रीं सः परमघोरे हूं घोररूपे उरलकस हैं महात्रिपुरसुंदरि देविवर ११

देवि ॐ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः विशुद्धपीठस्थे विशुद्धा डाकिनि विशुद्ध नाथ श्री पादुकां पूजयामि॥ इति कंठस्थ षोडश दले विशुद्ध चक्रे मध्ये विन्यस्य परितस्तदावरण देवतान्यसेत्॥ अं अमृतायै नमः॥ आं आकर्षिण्यै नमः॥ इं इंद्राण्यै नमः॥ ईं ईशान्यै नमः॥ उं उमायै नमः॥ ऊं ऊर्ध्वकेशिन्यै नमः॥ ऋं ऋद्धिदायै नमः॥ ॠं ॠरूपायै नमः॥ ऌं ऌकारायै नमः॥ ॡं ॡपायै नमः॥ एं एकपदायै। ऐं ऐश्वर्यात्मिकायै। ओं ओंकारिण्यै। औं औषधात्मिकायै॥ अं अंबिकायै। अः अक्षरात्मिकायै॥ इति षोडशदले न्यसेत्॥ ततः रां रीं रूं रैं रौं रः राकिनि मां रक्ष रक्ष मद्रक्तं रक्ष रक्ष सर्व सत्व वशंकरि देवि आगच्छागच्छ इमां पूजां गृह्ण गृह्ण ह्रीं घोर देवि ह्रीं सः परमघोरे हूं घोर रूपे ठ ठ ल क स हैं महात्रिपुरसुंदरि देवि वरदेवि वें कं खं गं घं ङं चं छं जं झं ञं टं ठं अनाहतपीठस्थे अनाहत राकिनि अनाहत नाथ श्री पादुकां पूजयामि॥ इति हृदयस्थ द्वादशदलानाहत चक्रमध्ये विन्यस्य परितः परिवार देवता विन्यसेत्॥ कं कालरात्र्यै। खं खातीतायै। गं गायत्र्यै। घं घंटाधारिण्यै॥ ङं ङार्णायै। चं चंडायै। छं छायायै। जं जयायै। झं झंकारिण्यै॥ ञं ज्ञानरूपिण्यै। टं टंकहस्तायै। ठं ठंकारिण्यै इति वर्णदेवताः पूर्वादिक्रमेण प्रादक्षिण्येन न्यसेत्॥ ततः लां लीं लूं लैं लौं लः लाकिनि मां रक्ष मम मांसं

रक्षरक्षसर्वसत्व वशंकरि देव्यागछागछ इमांपूजांगृह्णगृह्ण ह्रीं घोरदे
विह्रीं सः परमघोरे हूं घोररूपे डरलकसहैं महात्रिपुरसुंदरि देवि वरदे
१२ विश्चे डं ढं णं तं थं दं धं नं पं फं मणिपुरपीठस्थे मणिपुरलाकिनिमणिपु
रनाथश्री पादुकांपूजयामि इतिमणिपुरचक्रे दशदलपद्मे विन्यस
१५ परितः परिवारदेवता न्यसेत्॥ डं डामर्यै॥ ढं ढंकारिण्यै। णं णाकि
६ न्यै। तं तामस्यै। थं थाराव्यै॥ दं दक्षायै। धं धात्र्यै। नं नंदायै। पं पार्वत्यै।
फं फ ङ्कारिण्यै। इतिदशवर्णदेवताः पूर्वादिक्रमेण न्यसेत्॥ ततः कां
कीं कूं कैं कौं कः काकिनि मांरक्षरक्षमन्ने दोरक्षरक्षसर्वसत्ववशंकरि
देवि आगछागछ मांपूजांगृह्णगृह्ण ह्रीं घोरदेवि ह्रीं सः परघोरे हूं घोर
रूपे डरलकसहैं महात्रिपुरसुंदरी देवि वरे वं भं यं रं लं स्वाधिष्ठान
पीठस्थे काकिनि स्वधिष्ठाननाथश्री पादुकांपूजयामि॥ इतिमध्ये वि
न्यस्यपरितो वर्णदेवतान्यसेत्॥ वं बंधिन्यैनमः॥ भं भद्रकाल्यै। मं
महामायायै। यं यशस्विन्यै। रं रमायै। लं लंबोष्ठ्यै। इति स्वाधिष्ठान
चक्रे षड्दले। ततः सां सीं सूं सैं सौं सः शाकिनिमां रक्षरक्षममास्थि
रक्षरक्षसर्वसत्व वशंकरिदेव्यागछागछ इमांपूजांगृह्ण ह्रीं ह्रीं ग
घोरदेवि ह्रीं सः परमघोरे हूं घोरस्वरूपे डरलकसहैं महात्रिपुर १२
सुंदरी देवि वरदे विश्चे वं शं षं सं मूलाधारपीठस्थे मूलाधारशा

किनिमूलाधारशाकिनि मूलाधारनाथश्रीपादुकांपूजयामि इति मूलाधा
र चक्रे चतुर्दलमध्ये विन्यस्य परितो वर्णदेवता न्यसेत्॥ वंवरदायै नमः॥ शं
श्रियै॥ षंषंडदायै॥ संसरस्वत्यै॥ इति मूलाधारचक्रे॥ हांहींहूंहैंहौंहः हा
किनि मां रक्ष रक्ष मम्मा ॐ रक्ष रक्ष सर्वसत्व वशंकरि देव्या गच्छागच्छ इ
मां पूजां गृह्ण गृह्ण ह्रीं घोरदेवि ह्रीं सः परमघोरे हूं घोररूपे डरलकसहैं महा
त्रिपुरसुंदरी देवि वरदे विच्चे हूं क्षं आज्ञापीठस्थे आज्ञा हाकिनि आज्ञानाथ
श्रीपादुकांपूजयामि इत्याज्ञाचक्रे द्विदलमध्ये विन्यस्य परितो वर्णदेव
ता न्यसेत्॥ हंहंसवच्चै॥ क्षंक्षमावत्यै॥ ततः यांयींयूंयैंयौंयः याकिनि
मां रक्ष रक्ष मम ॐ रक्ष रक्ष सर्वसत्ववशंकरि देव्या॥ गच्छागच्छ इमां पूजां
गृह्ण गृह्ण ह्रीं घोरदेवि ह्रीं सः परघोरे हूं घोररूपे डरलवसहैं महात्रिपु
रसुंदरि देवि वरदे विच्चे अंआं इत्यादिक्षंपर्य्यंतं एकपंचाशद्वर्णानुच्चा
र्य ब्रह्मरंध्रपीठस्थे ब्रह्मरंध्र याकिनि ब्रह्मरंध्रनाथश्रीपादुकांपूजया
मि इति शिरसि सहस्रदलमध्ये विन्यस्य परितो मृता दिक्षमावतीप
र्य्यंता एकपंचाशद्वर्णा देवता न्यसेत्॥ इति योगिनीन्यासः॥ अथ रा
शिन्यासः॥ अंआंइंईं मेषाय नमः॥ दक्षिणपादतले॥ उंऊंऋंॠं वृषाय
नमः॥ दक्षिणमुष्के॥ ऌंॡं मिथुनाय नमः दक्षिणपार्श्वे॥ एंऐं कर्की

यनमः दक्षिणपार्श्वे। ॐ औं सिंहाय नमः दक्षिणभुजे। ॐ अः शं षं सं हं
लं क्षं कन्यायै शिरो दक्षिणभागे। कं ५ तुलायै नमः शिरो वामभागे। चं ५
१२ वृश्चिकाय नमः वामभुजे। टं ५ धनुषे नमः वामपार्श्वे तं ५ मकराय नमः
13 कट्यां। पं ५ कुंभाय नमः क वाममुष्के। यं रं लं वं मीनाय नमः वामपादतले। इ
ति राशिन्यासः॥ अथ पीठन्यासः। ॐ कामरूपपीठाय नमः आं वाराण
सीपीठाय नमः। इं नैपालपीठाय नमः। ईं पौण्ड्रवर्धनपीठाय नमः। उं परस्थि
रपीठाय नमः। ऊं कन्याकुब्जपीठाय नमः। ऋं पूर्णगिरिपीठाय नमः। ॠं
अर्बुदपीठाय नमः। लृं आम्रातकेश्वरपीठाय नमः। ॡं एकाम्रपीठाय न
मः। एं त्रिःस्रोतःपीठाय नमः। ऐं कामकोट्टपीठाय नमः। ॐ कैलासपीठा
य नमः। औं भृगुपुरीपीठाय नमः। ॐ केदारपीठाय नमः। अः चंद्रपुरपी
ठाय नमः। कं श्रीपुरपीठाय नमः। खं एकपादपीठाय नमः। गं जालंधरपी
व ठाय नमः। घं मालवपीठाय नमः। ङं कूलूरपीठाय नमः। चं देविकोट्टपीठा
य नमः। छं गोकर्णपीठाय नमः। जं मारुतेश्वरपीठाय नमः। झं कां। चीपुर
पीठाय नमः। ञं विरजापीठाय नमः। टं राजगृहपीठाय नमः। ठं महापथ
पीठाय नमः। डं कोल्लागिरिपीठाय नमः। ढं एलापुरपीठाय नमः। णं
ॐकारपुरपीठाय नमः। तं जयंतिकापुरपीठाय नमः। थं उज्जयिनिपुर
पीठाय नमः। दं चरित्रापुरपीठाय नमः। धं क्षीरकपुरपीठाय नमः। १२

नं हस्तिनापुरपीठायनमः॥ पं उड्डीशपुरीपीठायनमः॥ फं प्रयागपुरपीठा
यनमः॥ बं षष्ठपुरपीठायनमः॥ भं मायापुरपीठायनमः॥ मं जलेश्वरपी
ठायनमः॥ यं मलयगिरिपीठायनमः॥ रं श्रीशैलपुरपीठायनमः॥ लं
मेरुगिरीपीठायनमः॥ वं गिरिवरपीठायनमः॥ शं महेंद्रपुरपीठायनमः॥
षं वामनपुरपीठायनमः॥ सं हिरण्यपुरपीठायनमः॥ हं महालक्ष्मीपु
रपीठायनमः॥ ळं उड्याणपुरपीठायनमः॥ क्षं छत्रपुरपीठायनमः॥
इतिमातृकान्यासक्रमेण न्यसेत्॥ इतिपीठन्यासः॥ सर्वोत्तमोत्त
मः॥ एषन्यासकर्त्तासाक्षात्परदेवतारूपोनपराकृतः॥ षोढान्यासं
विधाययत्रयत्रगच्छति तत्रतत्रसकलकार्यसिद्धिः॥ राजादयोव
श्यंभवंति॥ क्रुधः सन्नूयंप्रणमेत्स अचिरादेवयमवशोभवति। षो
ढान्यासविहीनेयंप्रणमति तस्यायुःक्षयोभवति॥ किंबहुनासदे
वसर्ववंद्यः नकोपितस्यवंद्यः॥ मातापितृपूज्यानांमपि देवताबु
द्ध्याप्रणामंकुर्यात्॥ नतुमनुष्यबुध्या॥ इतिषोढान्यासंविधायश्री
चक्रन्यासंकुर्यात्॥ त्रैलोक्यमोहनचक्रायनमः॥ बाह्यचतुरस्ररेखा
यनमः॥ व्यापकंविधाय अणिमासिध्यैनमः॥ दक्षिणांसपृष्ठे॥ ल
घिमासिध्यै ~~नमः~~ दक्षिणपराग्रे॥ महिमासिध्यैनमः। दक्षिणस्फि
जि॥ ईशित्वसिध्यैनमः॥

दक्षिणपादाग्रे। वशित्वसिद्ध्यै नमः॥ वामपादाग्रे। प्राकाम्यसिद्ध्यै वा
मस्फिजि॥ भुक्तिसिद्ध्यै वामपाण्यग्रे। इच्छासिद्ध्यै वामांसपृष्ठे।
१४ प्राप्तिसिद्ध्यै शिरःपृष्ठभागे। मोक्षसिद्ध्यै पृष्ठे। ततो मध्यचतुरस्र
रेखायै नमः॥ इति व्यापकं कुर्यात्। आं ब्राह्म्यै नमः पादांगुष्ठद्वये।
15 ईं माहेश्वर्यै नमः दक्षिणपार्श्वे। ऊं कौमार्यै मूर्धनि। ऋं वैष्णव्यै वामपा
र्श्वे। ॡं वाराह्यै वामजानुनि। ऐं इंद्राण्यै दक्षिणजानुनि। औं चामुंडायै पा
दक्षिणांसे। अः महालक्ष्म्यै वामांसे। ततः अंतश्चतुरस्ररेखायै नम
इति व्यापकं कुर्यात्। द्रां सर्वसंक्षोभिण्यै मुद्रायै नमः॥ पादांगुष्ठद्वये। द्रीं दू
सर्वविद्राविण्यै दक्षिणपार्श्वे। क्लीं सर्वाकर्षिण्यै मुद्रायै मूर्धनि। ब्लूं सर्वा
वेशकर्यै मुद्रायै वामपार्श्वे। सः सर्वोन्मादिन्यै मुद्रायै वामजानुनि
क्रों महांकुशामुद्रायै दक्षिणजानुनि। हस्रखफ्रें सर्वखेचरीमुद्रायै
दक्षिणांसे। ह्सैं ह्स्क्लीं ह्सौः सर्वत्रिखंडमुद्रायै वामांसे। ह्सौः सर्व
बीजमुद्रायै नमः। द्वादशांते। ऐं सर्वसन्निकर्ष्यै महायोनिमुद्रायै
पादांगुष्ठद्वये॥ इति व्यापकं विन्यस्य अं आं सौः त्रिपुराचक्रे १४
श्वर्यै स्वाहा॥ इति व्यापकं विधाय एताः प्रकटयोगिन्यः त्रैलोक्य
मोहनचक्रे सचक्राः समंत्राः ससिद्धयः सायुधाः सपरिवाराः
न्यस्ताः संतु नमः इति व्यापकं कुर्यात्॥ इति प्रथमावरणं॥ ततः

सर्वाशापरिपूरकचक्राय नमः इति व्यापकं विधाय षोडशदलपद्माय
नम इति व्यापकं कुर्यात्॥ अं कामाकर्षिण्यै नित्याकलायै दक्षिणक
र्णपृष्ठे। आं बुध्याकर्षिण्यै नित्याकलायै दक्षिणांसे। इं अहंकाराक
र्षिण्यै नित्याकलायै दक्षिणकूर्परे। ईं शब्दाकर्षिण्यै नित्याकलायै
दक्षिणकरपृष्ठे। उं स्पर्शाकर्षिण्यै नित्याकलायै दक्षिणोरौ। ऊं रू
पाकर्षिण्यै नित्याकलायै दक्षिणजानुनि॥ ऋं रसाकर्षिण्यै नित्याक
लायै दक्षिणगुल्फे। ॠं गंधाकर्षिण्यै नित्याकलायै पादतले। ऌं चि
त्ताकर्षिण्यै नित्याकलायै वामपादतले। ॡं धैर्याकर्षिण्यै नित्याकला
यै वामगुल्फे। एं स्मृत्याकर्षिण्यै नित्याकलायै वामजानुनि। ऐं नामाक
र्षिण्यै नित्याकलायै वामोरौ। ओं बीजाकर्षिण्यै नित्याकलायै वामकर
पृष्ठे। औं आत्माकर्षिण्यै नित्याकलायै वामकूर्परे। अं अमृताकर्षिण्यै
नित्याकलायै वामांसे। अः शरीराकर्षिण्यै नित्याकलायै वामकर्णपृ
ष्ठे। ऐं क्लीं सौः त्रिपुरेश्वरी चक्रेश्वर्यै नमो हृदये। तस्या दक्षिणभागे ल
घिमासिद्ध्यै नमः वामे। ह्रीं द्राविणी मुद्रायै नमः इति विन्यस्य ऐं क्लीं
सौः त्रिपुरेश्वर्यै चक्रेश्वर्यै देव्यै स्वाहेति व्यापयेत्। एताः गुप्त योगिन्यः
सर्वाशापरिपूरके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः स
परिवारान्यस्ताः सन्तु नमः इति व्यापकं कुर्यात्॥ इति द्वितीयावर

णन्यासः। ह्रीं क्लीं सौः ततः सर्वसंक्षोभणचक्रायनमः। अष्टदलपद्मायन
मः। इति व्याप्यकं ५ अनंगकुसुमायै नमः इति दक्षिणशंखे। खं ५ अ
१५ नंगमेखलायै दक्षिणजत्रुणि। गं ५ अनंगमदनायै दक्षिणोर्वंतो। घं
15 अनंगमदनातुरायै दक्षिणगुल्फे। पं ५ अनंगरेखायै वामगुल्फे। यं रं लं
वं अनंगवेगिन्यै वामोरौ। शं षं सं हं अनंगांकुशायै वामजत्रुणि॥ लं क्षं
अनंगमालिन्यै वामशंखे। इति विन्यस्य ह्रीं क्लीं सौः त्रिपुरत्रिपुरसुंद
र्यै देव्यै चक्रेश्वर्यै स्वाहा इति व्याप्य एता गुप्ततरयोगिन्यः सर्वसंक्षोभणच
क्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः न्यस्ताः संतु
नम इति व्यापकं कुर्यात्॥ इति द्वितीयावरणन्यासः॥ हैं ह्क्लीं ह्सौः सर्वसौ
भाग्यदायकचक्रायनम इति व्याप्य चतुर्दशारचक्रायनम इति व्या
पकं कुर्यात्॥ टं सर्वसंक्षोभिण्यै नमः ललाटदक्षिणभागे। ठं सर्ववि
द्राविण्यै दक्षिणगंडे। डं सर्वाकर्षिण्यै दक्षिणांसमध्ये। ढं सर्वाह्लादि
न्यै दक्षिणपार्श्वांते। णं सर्वसंमोहिन्यै दक्षिणोर्वंते। तं सर्वस्तंभिन्यै द
क्षिणजंघांते। थं सर्वजृंभिन्यै वामजंघांते। दं सर्ववशंकर्यै वामोर्वंते।
धं सर्वरंजिन्यै वामपार्श्वांते। नं सर्वोन्मादिन्यै वामांसमध्ये। पं सर्वार्थ
साधिन्यै वामांगंडे। फं सर्वाशापरिपूरिण्यै ललाटवामभागे। बं सर्व १५
मंत्रमय्यै ललाटमध्ये। भं सर्वद्वंद्वक्षयंकर्यै ललाटपृष्ठभागे। इति वि

न्यस्य हैं ह्क्लीं ह्सौः त्रिपुरावासिन्यै चक्रेश्वर्यै देव्यै स्वाहा इति व्याप्य
एना। संप्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्रा इत्यादिना व्या
पकं कुर्यात्। ततः सर्वार्थसाधक चक्राय नमः। बाह्य दशार चक्राय
नमः इति व्यापकं सर्वसिद्धिप्रदायै दक्षिणनेत्रे। खं सर्वसंपत्प्रदायै ना
सामूले। गं सर्वप्रियंकर्यै वामनेत्रे। घं सर्वमंगलकारिण्यै कुक्षेरीशा
न कोणे॥ ङं सर्वकामप्रदायै कुक्ष वायुकोणे। चं सर्वदुःखविमोचिन्यै
वामजानुनि। छं सर्वमृत्युप्रशमन्यै दक्षिण जानुनि। जं सर्वविघ्ननिवा
रिण्यै गुदे। झं सर्वांगसुंदर्यै कुक्षिनैरृत्यकोणे। ञं सर्वसौभाग्यदायि
न्यै कुक्षि वान्हि कोणे। इति विन्यस्य हैं ह्क्लीं ह्सौः त्रिपुराश्री चक्रेश्वर्यै दे
व्यै स्वाहेति व्याप्य एताः कुलकौलियोगिन्यः सर्वार्थसाधके चक्रे समु
द्रा इत्यादि पूर्ववद्व्यापकं कुर्यात्॥ ततः सर्वरक्षाकर चक्राय नमः। अंत
र्दशार चक्रासनाय नमः॥ इति व्याप्य यं सर्वज्ञायै दक्षिण नासारंध्रे। रं
सर्वशक्त्यै दक्षिणसृक्किणि। लं सर्वैश्वर्यप्रदायै दक्षिणस्तने। वं सर्वज्ञा
नमय्यै दक्षिणमुष्के। शं सर्वव्याधिविनाशिन्यै सीवन्यां॥ षं सर्वाधार
स्वरूपिण्यै वाममुष्के सं सर्वपापहरा देवि वामस्तने। हं सर्वानंदम
यै वामस्यसृक्किणि॥ ळं सर्वरक्षाकरायै नासारंध्रे। क्षं सर्वेप्सितप्र
दायै नासाग्रे। इति विन्यस्य ह्रीं क्लीं ब्लें त्रिपुरामालिन्यै चक्रेश्वर्यै स्वा

हेति व्याप्य एतानि गर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्रा इत्यादि पूर्ववत्

व्या व्यापकं कुर्यात्। ततः सर्वरोगहरचक्राय नमः॥ इति व्यापकं विधाय ऐं

ह्रीं श्रीं अं १६ ब्लूं वशिनी वाग्देवतायै नमः चिबुके दक्षिणभागे। कं ५ कल ह्रीं

१६ कामेश्वर्यै वाग्देवतायै कंठदक्षिणभागे। चं ५ न्क्लीं मोदिनी वाग्देवतायै हृ ह

16 दय दक्षिणभागे। टं ५ ब्लूं विमला वाग्देवतायै नाभे दक्षिणभागे। तं ५ ज्म्रीं अरु

णा वाग्देवतायै म[illegible]ठे उत्तरभागे। पं ५ ह्स्ल्व्यूं जयिनी वाग्देवतायै हृदय कोत्त

रभागे॥ यं रं लं वं [illegible] सर्वेश्वर्यै वाग्देवतायै कंठोत्तरभागे। शं षं सं हं लं क्षं

क्ष्म्रीं कौलिनी वाग्देवतायै चिबुकोत्तरभागे। एवं विन्यस्य श्रीं ह्रीं सौः त्रिपुरा

सिद्धा चक्रेश्वर्यै देव्यै स्वाहा॥ इति व्याप्य एता रहस्ययोगिन्यः सर्वरोग

हरे चक्रे समुद्रा इत्यादि पूर्ववत्। ततः अष्टकोण त्रिकोणमध्य देवताभ्यो

भ्यो नमः इति व्यापकं विधाय हृदये त्रिकोणं विचिंत्य तस्य चतुर्दिक्षु आ

युधदेवता विन्यसेत्। ऐं ह्रीं श्रीं ऐं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां जं जंभ

नेभ्यः कामेश्वर बाणेभ्यो नमः। ऐं ह्रीं श्रीं यां रां लां शों सां ऐं द्रां द्रीं क्लूं ब्लूं ब्लूं

सः जं जंभनेभ्यः कामेश्वरी बाणेभ्यो नमः इति हृदयश्रीकोणस्य पश्चि

मभागे न्यसेत्। ऐं ह्रीं श्रीं थं मोहनाय कामेश्वर चापाय [illegible]मः ऐं

ह्रीं श्रीं थं मोहनाय कामेश्वरी चापाय नमः। त्रिकोणे [illegible]त्तरे। ऐं ह्रीं श्रीं १६

आं आकर्षणाय कामेश्वर पाशाय नमः। ऐं ह्रीं श्रीं आं कर्षणाय का

कामेश्वरीपाशायनमः।। त्रिकोणपूर्वभागे। ऐं ह्रीं श्रीं क्रों स्तंभनाय कामेश्व
रांकुशायनमः। ऐं ह्रीं श्रीं क्रों स्तंभनाय कामेश्वर्यै कुशायनमः त्रिकोणदक्षि
णे। ततः सर्वसिद्धिप्रदचक्रायनमः।। अंतस्त्रिकोणाय नमइति व्यापकं
विधाय।। ऐं ह्रीं श्रीं प्रथमकूटमुच्चार्याग्निचक्रे कामगिरिपीठे मित्रेशना
थात्मिके कामेश्वरीदेवि रुद्रात्मकशक्ति श्रीपादुकां पूजयामि।। इति त्रि
कोणाग्रे।। ऐं ह्रीं श्रीं द्वितीयकूटमुच्चार्य सूर्यचक्रे जालंधरपीठे षष्ठीश
स्वा नाथात्मिके वज्रेश्वरीदेवि विष्ण्वात्मशक्ति श्रीपादुकां पूजयामि।। इति त्रि
कोणस्याग्नेयकोणे।। ऐं ह्रीं श्रीं तृतीयकूटमुच्चार्य सोमचक्रे पूर्णगिरि
पीठे उड्डीशनाथात्मिके।। भगमालिनीदेवि ब्रह्मात्मकशक्ति श्रीपादु
कां पूजयामीति त्रिकोणैशानकोणे।। ह्स्रैं ह्स्क्लीं ह्स्रौंः त्रिपुरावाचक्रे
ह श्वर्यै दैव्यैस्वाहेति व्याप्यस्ताः अतिरैस्य योगिन्यः सर्वसिद्धिप्रदचक्रे
समुद्रा इत्यादि पूर्ववत् हसकलरडैं हसकलरडीं हसकलरडौः त्रिपु
रभैरवीचक्रेश्वरी श्रीपादु०। एताः परापररहस्ययोगिन्यः सर्वानयम
हाचक्राय नमः।। वैंदवे नमः इति व्याप्य मूलविद्यां समस्तामुच्चार्य ब्र
ह्मचक्रे ॐ आणपीठे चर्यानंदनाथात्मिके परब्रह्मात्मशक्ति महात्रि
सुंदरी पुरदेवि श्रीपादुकां पूजयामीति हृदये त्रिकोणमध्ये बिंदुं विचिंत्य न्य
सेत्।। ततः पंचदशनित्या।। सायेसंध्यो कांः त्रिकोणांतर्दक्षिणपू

वीतररेखासुपंचपंचविन्यस्य : षोडशीमहात्रिपुरसुंदरीमध्यविंदौवि
न्यसेत् ।। इति क्रमः शास्यादिमते । तंत्रराजमते विंदावेव न्यसेत् ।। कामेश्व
१७ र्याः चित्रांताः त्रिकोणभागे रेखा बहिर्गुरुपंक्तिं विन्यसेत् परमशिवना
थश्रीपादुकां पूजयामि ।। पराशक्त्यंबाश्रीपादुकां पू० कामेश्वर्यंबाश्री
17 पादुकां० वज्रेश्वर्यंबाश्रीपादुकां० भगमालिन्यंबाश्रीपादु० लोपामुद्रां
बाश्रीपादु० अगस्त्यानंदनाथश्रीपादुकां पूजयामीति सप्त दिव्यौघाः
कंकलानंदनाथश्रीपादुकां० धर्माचार्यनंदनाथश्रीपादुकां० मुक्त
केशिन्यंबाश्रीपादुकां० दीपकानंदनाथश्रीपादुकां पूजयामीति चत्वा
रः सिद्धौघाः जिष्णुदेवानंदनाथश्रीपादुकां० मातृगुप्तानंदनाथश्री
पादुकां० तेजोदेवानंदनाथश्रीपादुकां० नोआनंदनाथश्रीपादुकां० म
नोजवानंदनाथश्रीपादु० कामानंदनाथश्रीपादुकां० आज्ञानंदनाथ
श्रीपादु० परानंदनाथश्रीपादुकां० इत्यष्टौ मानवौघाः ।। अथ स्वगुरुप
रंपरा ।। माहेश्वरानंदनाथश्रीपा० संविदंबाश्रीपा० अरिंस्यानंदनाथ
श्रीपा० संविदंबाश्रीपा० रामानंदनाथश्रीपा० संविदंबाश्रीपा० ज्ञा
नानंदनाथश्रीपादु० संविदंबाश्रीपा० कामानंदनाथश्रीपा० संविदंबा १७
श्रीपा० आज्ञानंदनाथश्रीपा० संविदंबाश्रीपादु० इति विन्यस्य पूर्वोक्त
पेकानंदतरं गुरुनादत्तं स्वनाममूलाधारे न्यसेत् ।। इति संहारक्र

क मवर्णन्यासः ॥ अथसृष्टिक्रमचक्रन्यासः ॥ शिरसि त्रिकोणं विचिंत्य
मध्ये सर्वानंदमयमहाचक्राय नमः इति व्याप्य । बिंदुं विभाव्य समस्तविद्या
गुर्वार्यब्रह्मचक्रे ॐ आं ० पीठे इत्यादि महात्रिपुरसुंदरी श्रीपादुं ० इति म
ध्ये न्यसेत् ॥ ततः षोडश नित्याः स्वायं संध्योक्ताः मातृका स्वरस्थानेषु
न्यसेत् ॥ परमशिवानाथादि गुरुपङ्क्तीः शिरः पूर्वभागे विन्यस्य स्वनामम
ल्लाधारे न्यसेत ॥ ततः श्री अंसस्त्रिकोणाय नमः सर्वसिद्धिप्रदचक्राय
नमः ॥ इति व्यापकं विधाय । शिरसि त्रिकोणस्य पश्चिमकोणे पूर्वोक्तां का
मेश्वरीं न्यसेत् ॥ आग्नेये कोणे वज्रेश्वरीं ऐशान कोणे भगमालिनीं न्य
सेत् ॥ पूर्वोक्त मंत्रैरेव ॥ ततः अष्टकोणत्रिकोणमध्यदेवताभ्यो नमः
२ ऐं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां जं जं नाभ्यो नमः कामेश्वर बाणेभ्यो न
मः ॥ दक्षिण नेत्रे । ऐं ह्रीं श्रीं यां रां लां वां सां ऐं द्रां द्रीं क्लीं ब्लूं साजं जंभने
भ्यो नमः कामेश्वरी बाणेभ्यो नमः ॥ वामनेत्रे । थं मोहनाय कामेश्वर चा
पाय नमः दक्षिणभ्रुवि । २ थं मोहनायक कामेश्वरी चापाय नमः वामभ्रु
वि ॥ आं आकर्षणाय कामेश्वर पाशाय दक्षिणकर्णे ह्रीं आकर्षणाय
कामेश्वरी पाशाय नमः वामे ॥ ३ क्रों स्तंभनाय कामेश्वरांकुशाय नमः
दक्षिणनासाग्रे ३ क्रों स्तंभनाय कामेश्वर्यंकुशाय नासाग्रवामे । सर्व
रोगहरचक्राय नमः अष्टारचक्राय नमः इति व्याप्य शिरसि मुंडमाला
चक्रे क्रमेण पूर्वादितः प्रादक्षिण्ये वाग्देवताष्टकं वशिन्याष्टकं न्यसे

त्॥ सर्वरक्षाकर चक्राय नमः॥ अंतर्दशार चक्राय नमः॥ इति व्याप्य
सर्वज्ञाद्दिदशशक्ति नेत्रे मूले आपांगे कर्णमध्ये कर्णपृष्ठे चूलिकानि
१८ न्यस्य दक्षिणेन तस्योत्तरे वामकर्णपृष्ठे कर्णमध्ये वामनेत्रापांगे तस्यै
वमूले च क्रमेण न्यसेत्॥ ततः सर्वार्थ कचक्राय नमः॥ बाह्यदशार चक्रा
१८ यनमः॥ इति व्याप्य सर्वसिद्धिप्रदादिदशशक्तिः कंठस्थ षोडशदलेवि
शुद्धिचक्रे पूर्वादितः एकस्मिन्नेकस्मिन्द्वये द्वितियद्वितियक्रमे
ण प्रादक्षिण्येन न्यसेत्॥ सर्वसौभाग्यदायक चक्राय नमइति व्याप्य
हृदयस्थानाहतचक्रे द्वादशदले सर्वसंक्षोभिण्यादि चतुर्दशशक्तीः
पूर्वादि दशदलेषु विन्यस्य एकादशो[illegible]ले द्वादशदले च शक्तिं
द्वंद्वं न्यसेत्॥ सर्वसंक्षोभक चक्राय नमः॥ अष्टारपद्माय नमइति व्या
प्य नाभिस्थमणिपूरक चक्रे दशदले पूर्वादिषड्दलेषु अनंगकुसु
मादिषट्शक्ति विन्यस्य अनंगांकुशानंगगामिनीच दलद्वयदलद्व
ये न्यसेत्॥ सर्वाशापरिपूरक चक्राय नमः॥ षोडशदलपद्माय नमइ
ति व्याप्य स्वाधिष्ठानस्थ षड्दलेचक्रे कामाकर्षिण्य विषोडशशक्तीः
पूर्वादितः शक्ति। त्रयंत्रयं विन्यस्य षष्ठे दले षोडशीं शरीराकर्षिणी
न्यसेत्॥ त्रैलोक्यसंमोहन चक्राय चक्राय नमः॥ अंतस्त्रचतुरस्त्ररेखा
यै नमः॥ इति व्याप्य मूलाधार चतुर्दले पूर्वादितो मुद्रा द्वयं मुद्राद्व १८
यं विन्यस्य दक्षिणदलस्य निर्ऋतिभागे बीजमुद्रां उत्तरदलस्य दि

शान भागे योनिमुद्रां न्यसेत्॥ ततश्चतुरस्रे रेखायै। नम इति व्याप्य दक्षि
जंघायाः पश्चिमादि चतुर्दिक्षु वाम्यायव्यादिचतुः कोणेषु ब्राह्म्यादि वमा
दक्षिण्येन न्यसेत्॥ ततो बाह्य चतुरस्र रेखायै नम इति व्याप्य वामजंघायाः
पश्चिमादि चतुर्दिक्षु वाय्यादि चतुः कोणेषु अणिमादि सिद्धिर्विन्यस्य
प्राप्ति सिद्धिं वामपाद तले मोक्षसिद्धिं दक्षिणे न्यसेत्॥ ऐं आं सौः त्रिपुरा
कला चक्रेश्वर्यै स्वाहा इति व्याप्य एताः प्रकटयोगिन्य इत्यादि व्यापकं कुर्या
त्॥ सर्वत्र प्रति चक्रं तत्तच्चक्रेश्वर्यास्ततः समर्पणमंत्रेण व्यापकं कुर्यात्॥
— संहार चक्र न्यासवदत्रापि॥ इति तु सृष्टिचक्र न्यासः॥ अथ स्थितिक्रम
चक्र न्यासः॥ ऐं आं सौः इति करशुद्धिं कुर्यात्॥ वाग्भव कूटं मूर्धनि: काम
राजं गुह्ये। शक्तिः कूटं हृदये। वाग्भवं दक्षिण नेत्रे। कामराजं भालने
त्रे। वाग्भवं दक्षिण कर्णे। कामराजं वामं कर्णे। शक्तिं मुखे। वाग्भवं
दक्षिण भुजे। कामराजं वामे। शक्तिं पृष्ठे। वाग्भवं दक्षिण जानुनि
कामराजं वामे। शक्तिं नाभौ विन्यसेत्ततः ऐं आं सौः इति करशु
द्धिं कुर्यात्॥ ततः ऐं आं सौः पादयोः ऐं क्लीं सौः जंघयोः ह्रीं क्लीं सौः जा
नुनोः॥ हैं क्लीं ह्सौः इति ऊर्वोः। ह्सैः ह क्लीं ह्सौः स्फिजोः॥ ह्रीं क्लीं ब्लूं लिंगे
श्रीं ह्रीं सौः मूलाधारे। ह्सैं ह क्लीं ह्सौः मूलाधारोपरि। मूलविद्यां व्या
पकत्वेन न्यसेत्॥ त्रैलोक्य मोहन चक्राय नमः। अकुलपद्मे। सर्व

१९

१ त्रिपुरेशे सर्वसंक्षोभकचक्रायनमः। मूलाधारे सर्वसौ
भाग्य चक्रायनमः

शांपरिपूरक चक्रायनमः। स्वाधिष्ठाने। सर्वार्थसाधन चक्रायनमो
मणिपुरे। सर्वरक्षाकर चक्रायनमः। अनाहते। सर्वरोगहर चक्रायन
मः॥ विशुद्धौ। सर्वसिद्धिप्रद चक्रायनमः। लंबिकायां। सर्वानंदम
यमहा चक्रायनमः। मूर्ध्न्यादि ब्रह्मरंध्रांतं अकुले। ऐं क्लीं सौः विषु
वे। ह्रीं क्लीं सौः मूलाधारे। हैं ह्लीं ह्सौः स्वाधिष्ठाने। ह्सैं ह क्लीं ह्सौः म
णिपूरे। ह्रीं क्लीं ब्लूं अनाहते। श्रीं ह्रीं सौः। विशुद्धौ। ह्सैं ह क्लीं ह्सौः लंबिका
यां। ऐं ३ मूलविद्यां भ्रूमध्यादि ब्रह्मरंध्रांतं न्यसेत्। पुनः करशुद्धिं वि
धाय॥ ह्रां ऐं क्लीं सौः अंगुष्ठाभ्यां नमः। ह्रीं ऐं क्लीं सौः तर्जनीभ्यां नमः
ह्रूं ऐं क्लीं सौः मध्यमाभ्यां नमः ह्रैं ऐं क्लीं सौः अनामिकाभ्यां नमः। ह्रौं ऐं क्लीं
सौः कनिष्ठिकाभ्यां नमः। ह्रः ऐं क्लीं सौः करतलकरपृष्ठाभ्यां। इत्यंगु
लि न्यासं विधाय। ऐं क्लीं सौः इति पुनः करशुद्धिं कुर्यात्। वाग्भवं मू
धारे कामराजं हृदये। शक्तिं भ्रूमध्ये। समस्तविद्यां ब्रह्मरंध्रे विन्य
स्य समस्तप्रकटगुप्तगुप्ततरकुलकौलनिगर्भरहस्यातिरहस्यपर
पररहस्यसंज्ञक श्रीचक्रदेवतायोगिनीश्रीपादुकां पूजयामीति शरी
रं श्रीचक्रस्वरूपं भावयन् व्यापकं कुर्यात्। इति स्थितिचक्रन्यासः॥
वक्ष्यमाण हृदयादि षडंगन्यास मंत्रैरंगुलि न्यासं विधाय। ऐं क्लीं
सौः इति करौ शोधयेत्। ततः ह्रां ऐं क्लीं सौः सर्वज्ञायै हृदयाय नमः। १९
ह्रीं ऐं क्लीं सौः नित्यतृप्तायै शिरसे स्वाहा। ह्रूं ऐं क्लीं सौः अनादिबो

धायै शिखायै वौषट्। हैं ऐं क्लीं सौः स्वतन्त्रायै कवचाय हुं। हौं ऐं क्लीं सौः नित्यप्र हायै नेत्रत्रयायै वौषट्। हः ऐं क्लीं सौः अनन्तायै अस्त्राय फट्। इति षडङ्गं विधा य वाग्देवताष्टन्यासं कुर्यात्। ऐं ह्रीं श्रीं अं १६ ब्लूं वशिनी वाग्देवतायै नमः शिरसि। ऐं ह्रीं श्रीं कं ५ कल ह्रीं कामेश्वर्यै वाग्देवतायै नमः भाले ऐं ह्रीं श्रीं चं ५ न्व्लीं मोदिनी वाग्देवतायै नमः भ्रूमध्ये ऐं ह्रीं श्रीं टं ५ य्लूं विमला वाग्दे वतायै नमः कण्ठे ऐं ह्रीं श्रीं तं ५ ज्म्रीं अरुणा वाग्देवतायै। लिङ्गे। ऐं ह्रीं श्रीं शं षं सं हं ळं क्षं म्रीं कौलिनी वाग्देवतायै ऊरुमूलादि पादाग्रपर्यं। इ ति वाग्देवताष्टकन्यासः॥ प्रथमकूटमुच्चार्य अग्निचक्रे कामगिरिपी ठे मित्रेशनाथात्मिके कामेश्वरी देवि रुद्रात्मशक्ति श्रीपादुकां पूज यामि मूलाधारे। द्वितीयकूटमुच्चार्य सोमचक्रे जालन्धरपीठे वज्रे श्वरी देवी स्वात्मशक्ति श्रीपादुकां पूजयामि हृदये॥ तृतीयकूटमु च्चार्य सोमचक्रे पूर्णगिरिपीठे ॐ श्रीं उड्डीशनाथात्मिके भगमालिनी देवी ब्रह्मात्मकशक्ति श्रीपादुकां पूजयामि भ्रूमध्ये॥ समस्तविद्या मुच्चार्य ब्रह्मचक्रे ॐ ज्ञानपीठे चर्यानाथात्मिके परब्रह्मात्मिके श क्ति महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि ब्रह्मरन्ध्रे। इति चतुःपी ठन्यासः॥ ऐं वाग्भवमुच्चार्य आत्मतत्त्वाय नमः॥ पादादि नाभिपर्यं तं क्लीं। कामराजमुच्चार्य विद्यातत्त्वाय नमः नाभ्यादि कण्ठपर्यन्तं।

सौः शक्तिमुद्रायै शिवतत्त्वाय नमः केशादिशिरःपर्यंतं ॥ ऐं क्लीं सौः स
कलविद्यामुद्रायै सर्वतत्त्वाय नमः इति । शिरः प्रभृति पादाय पर्यंतं विन्य
२० सेदिति तत्त्वन्यासः ॥ जपाकुसुमभासुरां त्रिनयनां । त्रिकोणत्रयत्रयांत
२० रनिवासिनीं त्रिपुरसुंदरीं सेंदुकां ॥ करांबुजवत्तुष्यां मधुरचापपा
शांकुशां प्रसूनशरशोभिनीं ललितवेषभूषां भजे ॥ इति ध्यात्वा स्वा
भेदेन देवतां विचिंत्य योनिमुद्रां च प्रणम्य मानसैरुपचारैरभ्यर्च्य
येत् ॥ ततो गुरुं प्रणम्य शंखस्थापनं कुर्यात् ॥ आत्मनः पुरतो वायव्य
भागे त्रिकोणं विलिख्य तत्र अस्त्राय फडिति प्रक्षालितं । त्रिपदीं निधा
य दशकलात्मने ग्निमंडलाय नम इति त्रिपदीं संपूज्य तस्यामस्त्र
प्रक्षालितं शंखं निधाय द्वादशकलात्मने सूर्याय नम इति शंखं संपू
ज्य प्रणवेन जलमापूर्य षोडशकलात्मने सोममंडलाय नम जलं सं
पूज्य तेन जलेन यागभूमिं सर्वां प्रोक्षेत् ॥ ततः शंखदक्षिणभागे
त्रिकोणषट्कोणवृत्तचतुरस्रमंडलं विलिख्य । ऐं क्लीं सौः सौः क्लीं ऐं इ
ति पूर्वनैर्ऋत्यवायव्यपश्चिमाग्नेयेशानकोणेषु संपूज्याने नैव क्र
मेण कोणेष्वासनानि पूजयेत् ॥ अं आं सौः त्रिपुराकलादेव्यमृता
र्णवासनाय नमः ॥ ऐं क्लीं सौः त्रिपुरेश्वरि पोतांबुजासनाय नमः ॥ २०
ह्रीं क्लीं सौः त्रिपुरसुंदरीदेव्यात्मासनाय नमः ॥ हैं ह्क्लीं ह्सौः त्रिपुर

वासिनी देवी सर्वरक्षासनाय नमः॥ ह्सौं ह्क्लीं ह्सौः त्रिपुराश्री देवी सर्वमंत्रा
सनाय नमः॥ ह्रीं क्लीं ब्लें त्रिपुरमालिनि देवी साध्यासनाय नमः इति संपूज्य
अग्नि रक्षा स्कर वायु कोणेषु हृदयादिकमंग चतुष्टयं संपूज्य पुरतो नेत्रं दि
क्षु पूर्वादिष्वस्त्रं पूजयेत्॥ ऐं कामरूपपीठाय नमः। सौः जालंधरपीठाय
नमः। ऐं क्लीं सौः ॐ ज्ञानपीठाय नमः। पूजयेत्। मध्ये कामकलां लिखेत्॥
इति मंडले अस्त्र क्षालित त्रिपदीं निधाय रंरीं रूं लवरयूं रं धर्मप्रद दशक
ला त्मने वह्नि मंडलाय नम इति संपूज्य। यं धूम्रार्चिषे नमः। रं ऊष्मायै न
मः। लं ज्वालिन्यै नमः। वं ज्वालिन्यै नमः। शं विस्फुलिंगिन्यै नमः॥ षं सुश्रि
यै नमः। सं सुरूपायै। हं कपिलायै। लं हव्यवहायै। क्षं कव्यवहायै नमः
इति दश वह्निकलाः संपूजयेत्॥ ततस्त्रिपद्यां स्वर्णरजत ताम्र मृन्म
यानामन्यतमं कलशं अस्त्र प्रक्षालितं निधाय। कं भं तपिन्यै नमः। खं
बं तापिन्यै नमः। गं फं धूम्रायै। घं पं मरीच्यै। ङं नं ज्वालिन्यै। चं धं रुच्यै।
छं दं सुषुम्णायै। जं थं भोगदायिन्यै। झं तं विश्वायै। ञं णं बोधिन्यै।
टं ढं धारिण्यै। ठं डं क्षमायै नम इति कलशे संपूज्य। ह्रां ह्रीं ह्रूं हमलव
रयूं हं वस्त्रप्रद द्वादश कलात्मने सूर्य मंडलाय नम इति च संपूज्य क
लशे मातृकामुच्चरन् कर्पूरादि स्त्रवासितं जलं पूरयेत्॥ ततो जले
सां सीं सूं समवरयूं सं कामप्रद षोडश कलात्मने सोम मंडलाय नमः

इति संपूज्य ॥ अं असितांगनमः । आं ब्रह्माण्यै नमः । इं रुरुभैरवायनमः । ई
२१ माहेश्वर्यै नमः । उं चंड भैरवाय नमः । ऊं कौमार्यै नमः । ऋं क्रोधभैरवाय
नमः । ऌं इंद्राण्यै नमः । ॐ भीषण भैरवाय नमः । अं चामुंडायै नमः । अं सं
हार भैरवाय नमः । अः महालक्ष्म्यै नमः । इति कलशस्य पूर्वादितः । आ
ग्नेयां तं पूजयेत् ॥ ततः अं अमृतायै । आं आनंददायै । इं पूषायै ।
ई तुष्ट्यै । उं पुष्ट्यै । ऊं ऋध्यै । ऋं रत्यै । ॠं शशिन्यै । ऌं चंद्रिकायै ।
ॡं कांत्यै । एं ज्योत्स्नायै । ऐं श्रियै । ॐ प्रीत्यै । अं अंगदायै । अं पूर्णायै ।
अः पूर्णामृतायै । इति षोडशसोमकलाः मध्ये पूजयेत् ॥ कलशाद
क्षिभागे मत्स्यमुद्रया कलशस्थापनमंडलवदेव मंडलं विलिख्य
पूर्ववदेव मंडलं संपूज्य त्रिपदीं निधाय तथैव वह्निकलाः संपूज्य
तस्या स्फुरद्वर्णरजततात्रमयानामन्यतमं पात्रं निधाय पूर्ववदेव सूर्
र्यकलाः । संपूज्य पात्रमध्ये गंधाष्टकं निक्षिप्य कलशास्थजलं पात्रां
तरे पाकलशमव्वालय तुधस्यमूलमंत्रेण वंधूरयेत् । ऐं इतिपुष्पेणा
र्घ्यपात्रजलम् । लों अग्रपुष्पं निरस्य क्लीं इति गंधाष्टकलोलितं पुष्पं
निक्षिप्य सौः इति मालिनीमुद्रया जलं विलोक्य । सां सीं सूं सम
न्वर्यं संकामप्रदेषोडशकलात्मने सोममंडलाय दिव्यामृता २१
यनमः इतिजलं संपूज्य पूर्ववदेवभैरवाष्टकं ब्रह्माण्यादिशक्ति

सहितं पूजयेत्। ततो जलमध्ये षोडश सोमकलाः पूजयेत्। ग्लूं गगन
रत्नाय नमः। स्लूं स्वर्गरत्नाय नमः। म्लूं मर्त्यरत्नाय नमः। प्लूं पातालर
त्नाय नमः। जलमध्ये चतुर्दिक्षु पूजयेत्। जलमध्ये नवयोनिचक्रं विलि
ख्य मध्ये त्रिकोणे अकारादि षोडश स्वरान् दक्षिणतः ककारादि तका
रांतान् षोडश वर्णान् पूर्वतः थकारा सकारांतान् षोडश वर्णान् उ
त्तरतः पंक्तिः त्रयाकारेण लिखेत्। लिखितं भावयेदिति सर्वः मध्ये हक्षं
इति विरलं विलिख्य वर्णयोर्मध्ये कामकलां विलिखेत्। तं तत्त्रिको
णं वाग्भवाकृति विचिंत्य ऐं ह्रीं श्रीं ऐं ब्लूं ॐ जूं सः अमृते अमृतेश्वरि अ
मृतोद्भवे अमृतवर्षिणी अमृतं स्रावय स्वाहेति अमृतेश्वरी विद्यया
वारत्रयमभिमंत्रयेत्॥ अखंडैकरसानंदकलेवर सुधात्मनि स्वच्छं
दस्फुरणार्थाय विधेह्यकुलरूपिणी। इति वारचतुष्टयमभिमंत्रये
त्॥ हसक्षमवरयूं आनंदभैरवाय नमः। सहक्षमवरयीं आनंदभैरव्यै
नमः। इति जलमध्ये संपूज्य सुधादेव्यै वौषडिति अभिमंत्रयेत्। ततः
अकुलस्थामृताकारे सिद्धिज्ञानकरे परे। अमृतत्वं निधेह्यस्मिन्
वस्तुनि क्लिन्नरूपिणी इति वारपंचकमभिमंत्रयेत्। ततः हसक्षमवर
यूं सहक्षमलवरयीं इति नवात्मकमिथुनेन सप्तवारमभिमंत्रये
त्। ततो मूलमंत्रेण दशवारं नित्यामंत्रैरभिमंत्र्य कामकलया वा
रत्रयमभिमंत्रयेत्। ततः ॐ ह्रीं हंसः सोहं स्वाहा। आत्मशक्ति

श्री पादुकां पूजयामि। अआरकचटतपयशप्राणशक्ति श्रीपा
दुकां पूजयामि। इईरेखघछठथफरक्षअग्निशक्ति श्रीपादुकां पू
२२ जयामि। उऊं ॐ गजडदवलइलाशक्ति श्रीपादुकां पूजयामि। ऋ
ऋृऐलृसटघभवसर्जनशक्ति श्रीपादुकां पूजयामि। ~~ऋ~~ ऌ
ॡं अंङञणनमवहव्योमशक्ति श्रीपादुकां पूजयामि। रिति
भूतमंत्रैरभिमंत्रयेत्। चतुर्नवति कलाभ्यो नमः। इति संपूज्य
ॐ आं ह्रीं क्रों यरलवशषसहक्ष हौं हंसः सोहं चतुर्नवति कलानां
प्राणाः चतुर्नवति कलानां जीव इह स्थितः चतुर्नवति कलानां सर्वेन्द्रि
याणि वाङ्मनश्चक्षुः श्रोत्रं घ्राण प्राण इहायांतु चिरं तिष्ठंतु स्वाहा
क्रौं ह्रीं आं इति प्राणप्रतिष्ठा चतुर्नवति कलानां कुर्यात्। षोडशनित्या
भ्यो नमः इति पूजयेत्। नवमुद्राः प्रदर्श्य दिव्यामृतं भावयेत्। इत्यर्घ
स्थापनविधिः॥ ततो र्घपात्रजलबिंदुं पुष्पेणोद्धृत्य कलशे क्षिपेत्।
तेन जलेन कलशस्थे मालानं पूजोपकरणानि प्रोक्षयेत्॥ कलशा
स्थजलमुद्धरणपात्रेणोद्धृत्या स्तनो दक्षिणभागे त्रिकोणं विलिख्य त
त्र त्रिपदीं निधाय तसात्रं तस्या निधाय तसात्र जलं किंचिद्वामकरे
गृहीत्वा शिरसि गुरूपरंपरा स्तर्पयेत्। परमशिवनाथादितः स्वगु २२
रुपर्यंतं स्वनाम मूलाधारे ततः शाकिन्यादि धातु देवताः मूलाधारा

दि ब्रह्मरंध्रांतं संचिंत्य तर्पयेत्। ततो मूलाधारादि ब्रह्मरंध्रांतं तेजोरूप
मयीं कुंडलिनीरूपां परमेश्वरीरूपां मूलविद्यां विभाव्य तत्तेजोमयं स्वश
रीरं देवताभेदेन संचिंतयेत्॥ अरुणां करुणातरंगित। तौं ह्रौं धृतपा
शांकुशपुष्पबाणचापां॥ अणिमादिभिरावृतांमयूखैरहमित्येव
विभावये भवानीं॥ स्वशिरसि समस्तप्रकटेति समष्टिमंत्रेण शिर
सि पुष्पांजलिं दत्वा गंधादिभिरात्मानमलंकृत्य षोडश नित्यामंत्रैः
शिरसि हृदये वा संपूज्य तर्प्पयेत्। आत्माष्टाक्षरेण भूतमंत्रेण मू
लेन वारत्रयं संपूज्य तर्पयेत्॥ गुरुपादुकां शिरसि विचिंत्य तर्पये
त्॥ पूर्णाभिषेकयुक्तः कामकलां विश्रांतिलब्धवान्। कामकल
या संपूज्य तर्पयेत्॥ तद्यथा॥ सकलानंदनाथश्रीपादुकां पूजयामीति त्रिः कलानंदनाथश्रीपादुकां॰। नवानंदनाथश्रीपादुकां॰। अ
कूरानंदनाथश्रीपादु॰। सिद्धिदानंदनाथश्रीपादु॰। परमसंविदानंद
नाथश्रीपादुकां॰। सपरार्धकलानाथश्रीपादु॰। सपरार्धकलाना
थश्रीबिंदुस्तनयुग्मश्रीपादु॰। सपरार्धकलानाथव्यंजितरेखायोनि
मुद्रांश्रीपादु॰। कामकलां स्वदेहे विभाव्य तदुच्चारणपूर्वकं परमसं
वित्कला महासंदर्शी देवी श्रीपादु॰। एतत्संपूज्य तर्पयेत्। ततउद्धृत
जलं प्राच्यपीठे पूजां कुर्यात्। एतावत्कर्तुमसमर्थः परमशिवमा
यादिगुरुपादुकां संपूज्य तर्पयेत्॥ स्वगुरुपादुकां वारत्रयं संपू

अथ संतर्प्य सकलप्रपंचरमृतं सर्वसंसारोत्तीर्णं सच्चिदानंदरूपं परम
देवताविग्रहं ध्यात्वा गुरुं देवतां मंत्रं चाभेदेन विभाव्य उध्धृतं जलं प्रास्य
२३ पीठपूजां कुर्यात्॥ गं गणपतिनाथश्रीपादुकां पूजयामि। दूतर्यं वाश्री
पा०। सुंदर्यं वाश्रीप०। सुमुख्यं वाश्रीप०। विरूपां वाश्रीप०। विमलां वा
23 श्रीप०। अंतर्यं वाश्रीप०। चंदर्यं वाश्रीप०। पुरवर्यं वाश्रीप०। पुष्पमर्दं सं
वाश्रीप०। इति पीठशक्तिर्नवपूर्वादि दिक्षु पीठमध्ये संपूजयेत्॥ मि
त्रेशनाथश्रीपा०। षष्ठीशनाथश्रीप०। उड्डीशनाथश्रीपादुकां०। चर्या
नाथश्रीप०। इति पूर्वादि चतुर्दिक्षु पीठमध्ये संपूजयेत्॥ गं गणपति
नाथश्रीप०। वं वटुकनाथश्रीप०। क्षं क्षेत्रपालनाथश्रीप०। दुं दुर्गां
वाश्रीप०। इति पीठचतुर्दिक्षु पूजयेत्॥ तत आधारशक्त्यै वाश्रीपा०।
कूर्मनाथश्रीप०। अनंतनाथश्रीप०। पृथिव्यं वाश्रीप०। आधारशक्ते
रुपरि कूर्मं तदुपरि अनंतं। तदुपरि पृथिवीं भावयन् पूजयेत्॥ तत
अं आं सौः त्रिपुरबाला देवी अमृतार्णवासनाय नमः। ऐं क्लीं सौः त्रि
पुरेश्वरा देवी पोतांबुजासनाय नमः। ह्रीं क्लीं सौः त्रिपुरसुंदरी देवी दे
व्यासनायः। हैं ह्क्लीं ह्सौः त्रिपुरवासिनी देवी सर्वचक्रासनाय नमः।
ह्सैं ह्क्लीं ह्सौं त्रिपुराश्री देवी सर्वमंत्रासनाय नमः। ह्रीं क्लीं ब्लुं त्रिपु
रामालिनी देवी साध्यसिद्धासनायः। इति पीठे संपूजयेत्। ऐं क्लीं २३
सौः महात्रिपुरसुंदर्यासनाय नमः। देव्यासने श्रीचक्रे पुष्पांजलिं

विधाय कामगिरिपीठाय० । पूर्णगिरिपीठाय० । जालंधरीपीठाय० । ॐ आ
पापीठाय नम इति संपूज्य हां पृथिव्यधिपतये ब्रह्मणे नमः । हीं अपाम
धिपतये विष्णवे नमः । हूं तेजोधिपतये रुद्राय नमः । हैं वायधिपतये
ईश्वराय नमः । ह्रौं आकाशाधिपतये सदाशिवाय महाप्रेतपद्मासना
य नमः । इति श्रीचक्रे पूजयेत् । ततः समस्तप्रकटगुप्ततरसंप्रदाय गुप्त
कुलकौलनिगर्भरहस्यातिरहस्यपरापररहस्यसंज्ञक श्रीचक्रयो
गिनीदेवताश्रीपादुकां पूजयामि । इति पुष्पांजलिं विधाय सर्वाभ्यः
पीठदेवताभ्यः सर्वोपचारान् परिकल्पयामि नमः । पुनः पुष्पांजलिं
विधाय प्रणमेत् ॥ तत अंजलौ पुष्पाण्यादाय त्रिखंडमुद्रां विर
च्य वहन्नासारंध्राध्वना सकलप्रपंचव्यापकं परब्रह्माविनाभूत
चिच्छक्तिं भक्तानुग्रहनिमित्तं तेजोरूपेण स्फुरंतीं विचिंत्य तां तेजो
रूपामंजलौ समानीय महापद्मवनांतस्थे कारुणानंदविग्रहे सा
र्वभूतहितैर्मातरेह्येहि परमेश्वरि । इति तां तेजोमयीं परमदेवतां
महाबिंदुचक्रे ह्स्रैं ह्क्लीं ह्सौः महात्रिपुरसुंदरी अस्मिन् चक्रे सा
निध्यं कुरु कुरु नमः इति स्थापयेत् ॥ तां तेजः[illegible]रूपिणीं ध्यायेत् ॥ त
तः पद्मनिभां देवीं बालार्क किरणारुणां । जपाकुसुमसंकाशां
दाडिमीकुसुमोपमां । पद्मरागप्रतीकाशां कुंकुमोदकसंनिभां ॥
स्फुरन्मुकुटमाणिक्यकिंकिणीजालमंडितां ॥ बालालिकुलसं

कान्त्रा कुटिलालक प   वां।।प्रत्यग्रारुणसंकाशवदनांभोजमंड
लां।।किंचिदर्धेन्दुकुटिलललाटमृदुपट्टिकां।।पिनाकधनुराकार
२४ भ्रूलतां परमेश्वरीं।।आनंदमुदितोल्लोललीलांदोलितविग्रहलो
चनां।।स्फुरन्मयूखसंघातविकराधेमकुंडलां।।स्वगंडमंडला
२५ भोगजितेंदुमृतमंडलां।।विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासि
कां।।ताम्रविद्रुमबिंबाभरक्तोष्ठीममृतोपमां।।नैर्मल्यजितकुंदेदु
दंतपंक्तिविराजितां।।रत्नद्वीपसमुल्लासिजिह्वामलसुभाषिणीं।।स्मि
तमाधुर्यविजितमाधुर्यरससागरां।।कारिकडवाहिनींद्राणीदत्ततां
बूलवीटिकां।।अनौपम्यगुणोपेतांचिबुकोद्देशशोभितां।।भुवनो
त्पत्तिकल्याणकंठसूत्रविराजितां।।कंबुग्रीवांमहादेवींमृणाललि
ध तैर्भुजैः।।घृतपाशांकुशाभिक्षुधनुःपुष्पशराञ्चितां।।रक्तोत्पल
दलाकारसुकुमारकरांबुजां।।करांबुजनखज्योत्स्नावितानितन
भस्तलां।।बाहुमूलेनकेयूरकटकांगदशोभितां।।मुक्ताहारलतो
पेतसमुन्नतपयोधरां।।त्रिवलीवलनायुक्तमध्यदेशेनशोभितां।।
लावण्यासरिदावर्ताकारनाभिस्फशोभितां।।अनर्घ्यरत्नखचि २४
तकांचियुक्तनितंबिनी।।नितंबबिंबद्विरदरोमराजिवरांकुशां।।
कदलीललितस्तंभसुकुमारोरुमीश्वरीं।।लावण्याकदलीतुल्य

घा३

जंघायुगळमंडितां॥ गूढगुल्फपदद्वंद्वप्रपदाजितकच्छपां॥ तनुदीर्घा
गुलीभास्वन्नखपंक्तिविराजितां॥ चक्रस्वस्तिकशंखाब्जरेखांकित
पदद्वयं॥ ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणांबुजां॥ शीतांशुशतसंका
शकांतिसंतानहासिनीं॥ लौहित्यजितसिंदूरजपादाडिमरागिणीं॥
रक्तवस्त्रपरिधानांपाशांकुशकरोद्यतां॥ रक्तपुष्पनिविष्टांनुरक्ता
भरणमंडितां॥ चतुर्भुजांत्रिनेत्रांनपंचबाणधनुर्धरां॥ कर्पूरशाक
ललोन्मिश्रितांबुलापूरिताननां॥ महामृगमदोद्दामकुंकुमारुण
विग्रहां॥ सर्वशृंगारवेषाढ्यांसर्वावयवशोभितां॥ जगदाह्लादज
ननीं जगद्रंजनकारिणीं॥ जगदाकर्षणकरीं जगदानंदरूपिणीं॥
सर्वलक्ष्मीमयींनित्यांपरमानंदनंदितां॥ इति भक्तानुग्रहभरेणा
वयवधारिणीं विचिंत्य चक्रमध्ये पूजामारभेत॥ संस्थापिन्यासं
स्थाप्य सन्निरोधिन्यासन्निरुध्य। सन्निधिन्यासन्निधाप्य प्रार्थयि
न्या प्रार्थयेत्॥ धेनुमुद्रयासुधाधारां देव्याः शिरसि पतंतीं चिंतये
त्॥ ततो देव्यंगेषु षडंगं विन्यस्य आसनं विद्यावतीयखंडेन द
द्यात्॥ ऐं व॰ आसनं ते नमः॥ अत्रास्तं भवतीमदनुग्रहाय॥ त
तः शंखस्यांतरभागे त्रीणि ताम्रमयानिः एकं कांस्यमयः एवं च
त्वारिपात्राणि त्रिकोणमंडलानि विलिख्य तेषु स्थापयेत् ताम्र
मयानि कर्पूरवासितैस्तोयैः पूरयेत्॥ चतुर्थं कांस्यमयं दधि

मधुघृतैः पूरयेत्॥ पाद्यपात्रे लवंगोशीरचंदननागकेसरकुंकु
मानि निक्षिपेत्॥ अर्घ्यपात्रे कुशाग्रदूर्वाविष्णुक्रांताकर्पूरचंदन
२५ श्वेतशर्षपान्निक्षिपेत्॥ आचमनीयपात्रे लवंगोशीरजातीफल
25 कर्पूरसुगंधिपुष्पाणि च निक्षिपेत्॥ सर्वाणि मूलमंत्रेण बालया
वाभिमंत्र्य हस्ताभ्यां पाद्यपात्रमुद्धृत्य पाद्यं पादांबुजयोर्दद्यात्॥
सर्वत्रोपचारो विद्याद् तीयखंडेनेति तंत्रराजमतं॥ चतुःशत्यादि
मते बालया वा मूलेन वेति॥ सर्वत्रार्थं वदन् साध्यं ते नमइत्यादि त
न्तदुपचारेषु ऊहनीयमिति॥ ततोऽर्घ्यपात्रेणार्घ्यं दद्यात् देव्यंज
लौ शिरसि वा॥ मुखे आचमनीयं। मधुपर्कं हस्ते दत्वा प्राशितं देव्ये
ति भावयेत्॥ कर्पूरशलाकां दंतधावनं॥ गंडूषं। मुखप्रक्षालन
केशप्रसाधनं॥ चंपकादिभिः सुगंधितैलाभ्यंगं। उद्वर्तनं। उष्णो
दकस्नानं। पंचामृतस्नानं। कर्पूरादिसुगंधिजलैः कुंकुमोद
कैः स्नानं मूलमंत्राभिमंत्रितैः कलशजलैः कारयेत्॥ केशांगप्रो
छनं। पुनराचमनीं। इत्युपचारान्विधाय दिव्यरक्तवस्त्रयुग्मं परि
धापयेत्। मणिपादुके दत्वा भूषामंडपायता टंकयुगलं। नासा
भरणं। हारान्। कंठाभरणानि। केयूरकंकणरत्नांगुलीयककां २५
चीदामनूपुरयुगलचंद्रकलाशोभितमुकुटादिनानाकारैर्भूष
येत्। एतादृशालंकरणं कर्तुमशक्यत्वान्मनसा सर्वानुपचारा

न्नभावयेत्॥ इति गुरुसंप्रदायः॥ एवं भूषयित्वा। पूजामंडपमानीय श्री
चक्राधिष्ठिते दिव्यसिंहासने उपवेशयेत्॥ अंजनं कस्तूरीतिलकं।
आदर्शं छत्रं चामरयुगलं इति विविधोपचारैः परमदेवतां सत्कृ
त्य गंधाष्टकं समर्प्य अखंडतंडुलानक्षतानि विचयमल्लिकाजातीपु
न्नाग चंपकादिपुष्पाणि समर्प्य कंठे कल्हारमालामवलंबयेत्॥ त
तः पुष्पांजलिं पदयोर्दत्वा धूपग्रहणीमानीय तत्र विधूमानंगाराग्नि
धायार्घ्यपात्रजलैः प्रोक्ष्य रश्मित्यंगारानभिमंत्र्य। ॐ सुरभितेज
से स्वाहेति दशांगादि धूपमंगारेषु क्षिपेत्॥ घंटामानीय अस्त्रेण प्रो
क्ष्य गंधपुष्पाक्षतैः संपूज्य प्रणवेनाभिमंत्र्य वामकरे घंटां गृहीत्वा
हि नास्ति देवतेजोऽसीति पद्येन वादयेत्। देव्या ला सिकाग्रे नीचैः त्रि ना
र्वामतो दक्षिणं दक्षिणतो वाममिति चालयेत्॥ दक्षिणहस्तस्थितां —
धूपग्रहणीं उत्तरभागे निधाय। बलिदेवताभ्यो निवेदयेत्। ततो दी
पग्रहणीमानीय अर्घ्यजलेन प्रोक्ष्य तां घृतेनापूर्य तत्र वर्तिकां निधा
य तां प्रज्वाल्य ॐ ज्वालामालिनि हुं फट् स्वाहेति ज्वालामभिमंत्र्य
धेनुमुद्रां प्रदर्श्य पुष्पैः संपूज्य पूर्ववद् घंटां वादयन् दक्षिणकर
स्थां दीपग्रहणीं सुप्रकाशो महादीपः सर्वत्र तिमिरापहः। सबाह्याभ्यं
तरं ज्योतिर्दीपोऽयं प्रतिगृह्यतामिति देव्याः शिरसि उपरि नीत्वा च
रणाग्रमानीय पुनः शिरसि उपरि नयेत्॥ एवं त्रिः प्रदक्षिणं भ्राम

येत्॥ दीपग्रहणीमुत्तरभागे निधाय बलिदेवताभ्यो निवेदयेत्॥ ततो
नैवेद्यं सुवर्णादिपात्रस्थं नानाभक्ष्यभोज्यचूर्व्यचोष्यलेह्यपेयादि
२६ कमानीयास्त्रेणासंप्रोक्ष्य धेनुमुद्रयामृतीकृत्य मूलेन वारत्रय
मभिमंत्र्य। अपोशानं दत्त्वा सत्पात्रे विधिवित्सौख्यविविधानेकभ
८b क्षणं। निवेदयामि देवेशि सानुगायै गृहाण तत्। इदं नैवेद्यं भगव
त्यै त्रिपुरसुंदर्यै कामेश्वरीसहितायै निवेदयामीति निवेदयेत्॥ ग्रा
समुद्रया प्राणाय स्वाहेत्यादि पंचमंत्रैः पंचग्रासी कारयेत्। ततः ऐं
आत्मतत्वव्यापि महात्रिपुरसुंदरी कामेश्वरी तृप्यतु। क्लीं विद्यात
त्वव्यापि कामहात्रिपुरसुंदरी कामेश्वरी तृप्यतु॥ सौः शिवतत्वव्या
पकमहात्रिपुरसुंदरी कामेश्वरी तृप्यतु॥ ऐं क्लीं सौः सर्वतत्वव्या
पिका महात्रिपुरसुंदरी कामेश्वरी तृप्यतु॥ ऐं आत्मतत्वव्यापकः
कामेश्वरस्तृप्यतु। क्लीं विद्यातत्वव्यापकः कामेश्वरस्तृप्यतु। सौः शि
वतत्वव्यापकः कामेश्वरस्तृप्यतु। ऐं क्लीं सौः सर्वतत्वव्यापकः कामे
श्वरस्तृप्यतु॥ इति नैवेद्यवस्त्रा[illegible]च्यं तिर्हितः देवीं देवसहितां भुक्त
वतीं भावयेत्॥ उत्तरापोशानं दत्त्वा हस्तप्रक्षालनं पुनराचमनीयं
मुखवासं च दत्त्वा कर्पूरशकलमिश्रतांबूलं समर्प्य प्रसन्नार्घ्यं द
द्यात्॥ तद्यथा। पूर्वस्थापितार्घ्यपात्रे जलमापूर्य पूर्वोक्तद्रव्या २९
णि निक्षिप्य मूलमंत्रोच्चारणपूर्वकं महात्रिपुरसुंदर्यै भगवत्यै प्र

संज्ञार्घ्यं नम इति दद्यं जलेऽर्घ्यं दत्वा ॥ ततो नमस्कृत्या वरण पूजां कुर्यात् ॥ अथवा पुष्पांतां पूजां विधाय आवरण पूजां कुर्यात् ॥ पश्चान्नैवेद्यं सपरिवाराये निवेदयेत् ॥ संविन्मयि परे देवि परामृत रसप्रिये ॥ अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे ॥ इति अनुज्ञां लब्ध्वा वरण पूजां कुर्यात् ॥ आदौ मूलं गुर्वार्यं महात्रिपुरसुंदरी देवी श्रीपादुकां पूजयामि तर्पयामि नम इति संकेत मुद्रया अर्घ्यजल बिंदुना तर्पयेत् ॥ अयं विधिः पूजायां ज्ञेयः ॥ इति बैंदवे चक्रे वा रत्त्रयं संपूज्य संतर्प्य ॥ ऐं ह्रीं श्रीं अं सकल ह्रीं नित्यक्लिन्ने मदद्रवे सौः कामेश्वरी नित्या श्रीपादु० ॥ ऐं ह्रीं श्रीं आं मध्यम कूटं गुर्वार्यं ऐं भग भुगे भगिनि भगोदरि भगमाले गे भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्व भगवशंकरि भग रूपे नित्य क्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्न द्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं स्वाहा क्लीं भगमालिनि नित्या श्रीपा० ॥ ऐं ह्रीं श्रीं इं प्रथम कूटं गुर्वार्ये नित्यक्लिन्ने मदद्रवे स्वाहा नित्यक्लिन्ना नित्या श्रीपा० ॥ ऐं ह्रीं श्रीं ईं ॐ क्रों भ्रों क्रौं ह्रौं छ्रौं ज्रौं स्वाहा भेरुंडा नित्या श्रीपादुकां ॥ ऐं ह्रीं श्रीं उं ॐ ह्रीं वह्निवासिन्यै नमः वह्निवासिनी नित्या श्रीपा० ॥ ऐं ह्रीं श्रीं ह्रीं क्लिन्ने ऐं क्रौं नित्यमदद्रवे ह्रीं महावज्रेश्वरी नित्या श्रीपा० ॥ ऐं ह्रीं श्रीं ऋं ह्रीं शिवदूत्यै नमः शिवदूती नित्या श्री पादु० ॥ ऐं ह्रीं श्रीं ॠं ॐ ह्रीं कुं

ह्रीं

स्वेव छे क्षस्त्री हूं क्षे ह्री फट् लरितानित्याश्रीपादु० ऐं ह्रीं श्रीं ल्ह ऐं क्लीं सौः
कुलसुंदरी नित्याश्रीपादु० ऐं ह्रीं श्रीं न्हह सकलव डैं हस कलरडौं हस
२१ कलरडौं नित्या नित्याश्रीपा० ऐं ह्रीं श्रीं ऐं ह्रीं फ्रें स्त्रूं क्रों आं क्लीं चूं ऐं
नित्यमदद्रवे हुं फ्रें ह्रीं नीलपता [illegible] कानित्याश्रीपादु० ऐं ह्रीं श्रीं ऐं
भमरयऊं ॐ विजयानित्याश्रीपादु० ऐं ह्रीं श्रीं ॐ स्वौं सर्वमंगलानि
११ त्याश्रीपा० ऐं ह्रीं श्रीं ओं ॐ नमो भगवती ज्वालामालिनि देवदेवि सर्व
भूतसंहारकारिके जातवेदसि ज्वल ज्वल प्रज्वल प्रज्वल ह्रां
ह्रीं हूं र र र र र र र ज्वालामालिनि हुं फट् स्वाहा ज्वालामालिनी नित्या
श्रीपादुकां० ऐं ह्रीं श्रीं अं क्रौं चित्रा नित्या श्रीपादु० ऐं ह्रीं श्रीं अः मू
लमुच्चार्य महात्रिपुरासुंदरी देवी नित्यश्रीपादु० मो क्षार्थिनां तु तुरी
यं मूलं चार्य महात्रिपुरसुंदरी नित्याश्रीपादु० इति कामेश्वर्यादि पंच
अंतस्त्रिकोणाग्रमारभ्य आग्नेयकोणांतं पूजयेत्। वज्रेश्वर्यादि पंच
आग्नेयादि ईशान कोणांतं पूजयेत्। नीलपताकादि पंच ईशानादि
पश्चिमकोणांतं पूजयेत्॥ षोडशीं महात्रिपुरसुंदरीं वेदवे पूजयेत्॥
इति चतुःसत्यादि तंत्रराजमते तु देव्याः शरीरस्य पंचदशासु पूज्य षो
डशीं सकलनित्यारूपिणीं महात्रिपुरसुंदरीं पूजयेदिति॥ ततस्ति
थिनित्यां पूजयेत् तिथिनित्या नाम या नित्या यस्यास्तिथेर्भवति तां स्व
कीयस्थाने पूजयेत्॥ तथा हि शुक्लपक्षे कामेश्वर्यादि चित्रांताः ३१
प्रतिपदादि पौर्णमास्यांतं क्रमेणैकैकनित्या भवति। प्रतिपद का

